## अथ तृतीयखण्डे—

## [ कारक ः प्रश्नानामुत्तराणि ]

---

प्र० १—अत्र कारकप्रकरणीये "गतिबुद्धि" इति सूत्रे प्रत्यवसानकर्मकाणाम् अर्थशब्दस्य च प्रत्येकं योगः "द्वन्द्वान्ते श्रूयमाणम्पदम्प्रत्येकमभिसम्बध्यते" इति न्यायात्। कर्मशब्दश्चेह कर्मव्यतिहारवत् क्रियापरः किन्तु शब्दः कर्म येषामित्यर्थः। एवञ्च प्रयोजकव्यापारेऽन्यानधीनत्वरूपार्थप्राधान्यस्य शब्दप्राधान्यस्य च सत्वेनाऽन्तरङ्गादपि कर्तृत्वात् तदृगुरोर्भिकर्मत्वस्य बलीयस्त्वेन "कर्तुरीप्सिततमङ्कर्म" इत्येव सिद्धे सूत्रमिदं "गति बुद्धि" इति व्यर्थीभूय णिजर्थेनाप्यमानस्य यदि भवति कर्मसंज्ञा तर्हि गत्याद्यर्थानामेव कर्तुरिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थम्प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीयासिद्धिरिति भाष्यानुगो मनोरमाकारः।

अत एव आकडारीयम् प्रधानकार्यं सर्वतो बलवदिति कैयटमपि संगमयन्ति। अत एव च,

> गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
> नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते॥

इति कारिकापि संगच्छते। तत्र कर्तुः स्वधर्मेण तृतीययेत्यर्थः। प्रयोज्ये कर्तरि च तृतीयैव भवतीति हार्दम्।

किञ्च कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयत्वरूपस्वतन्त्रोपलक्षणन्नतु तत्संज्ञकपरम्, उद्देश्यत्वलक्षणार्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारे तु विधायकत्वमेवोचितमिति। आकडारसूत्रीयभाष्यकैयटविरोधात् समुपेक्ष्य एवैष प्रकार इति मनोरमाकृतस्तुशब्देन सूचयन्ति। एतद्भाष्यन्तु माधवशास्त्रिभण्डारिरचितप्रभाख्यटिप्पण्यां विशदं निरूपितमिति कदाचित् पृच्छ्यते चेत्ततोऽनुसन्धीयताम्।

प्र० २—तावेवार्थौ यस्येति तदर्थस्तस्य तदर्थस्य, अत्र तच्छब्देन पूर्वसूत्रवृत्ती व्यवहृपणी परामृश्येते तौ च पूर्वसूत्रे द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थे गृहीताविति इहापि द्यूते इति कर्मणीत्याद्यर्थः। उत्तरसूत्रद्वयारम्भसामर्थ्याच्च नेह "शेषे" इत्यस्य सम्बन्ध इति मनोरमाकाराः।

शब्दरत्नकारास्तु, नन्वत्र शेष इत्यस्य सम्बन्धेऽपि उत्तरसूत्रे "विभाषोपसर्गे" इत्यत्र सम्बन्धे "दिवस्तदर्थस्य" इत्यनेनैव तत्फलस्य सिद्धत्वेन तद्वैयर्थ्यापत्तिः। नच तथा सति "विभाषोपसर्गे" इत्यत्र शेषसम्बन्धेऽपि "षष्ठी शेषे" इति प्रवृत्त्या पक्षे समाससिद्धयेऽपि सूत्रञ्चरितार्थमिति वाच्यम्? "नोपसर्गे" इति न्यासेनैव

सद्धे "द्वितीया ब्राह्मणे" इति सूत्रवैयर्थ्यापत्तेः। नच तदनुपसर्गे द्वितीयार्थञ्चरितार्थमिति वाच्यम् ? कर्मत्वे विवक्षिते "कर्मणि द्वितीया" इत्यनेनैव सिद्धेः। न च "द्वितीया ब्राह्मणे" इत्यत्र शेषसम्बन्धे कर्मत्वेऽविवक्षिते सूत्रञ्चरितार्थमिति वाच्यम् ! विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वाद् गाम्प्रतिदीव्यन्ति इत्यत्र कर्मत्वस्यैव प्रतीतेश्च, एवमेव भाष्यसम्मतेश्च।

एवञ्च भाष्ये तिङन्तोदाहरणदानेनोत्तरसूत्रद्वयवैयर्थ्यापत्त्या वृत्तिकाशिकादिग्रन्थसम्मतेश्च नात्र शेषसम्बन्ध इति दिक्।

प्र० ३—कर्मसंज्ञाविधायकम् "अकथितञ्च" इति सूत्रम्। तत्र केनाकथितमिति आकाङ्क्षोपशामकत्वेन "अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। कारके इत्यधिकारात् प्रथमार्थे सौत्री सप्तमीति भाष्यसिद्धान्तात। नच त्यजनोपसर्जनं त्याजनं दुहेरर्थः गौः पयस्त्यजति गवा पयस्त्याजयते इति प्रतीतेर्व्यापारद्वयार्थत्वेन "कर्तुः" इति "तथायुक्तम्" इति सूत्राभ्यामेव तत्र २ कर्मत्वे सिद्धे सूत्रमिदं व्यर्थमिति वाच्यम् ? कर्मणश्शेषत्वविवक्षायां षष्ठी प्राप्नोति तां बाधितुमस्य चारितार्थ्यात्।

एवञ्चेह षष्ठीवत् सम्बन्धमात्रन्द्वितीयार्थः। अपादानत्वमात्रविवक्षायान्तु पञ्चम्येव। गोः क्षीरविशेषणत्वे तु षष्ठी, तेन गोः पयो दोग्धीत्यपि प्रयोगस्साधुरेवेत्यादि निरुक्तम्मनोरमाकृता।

शब्दरत्नकृता तु यदा पयोनिष्ठविभागानुकूलव्यापार एव धात्वर्थस्तदाऽपादानत्वाविवक्षायाम् अन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकमेव। एवमन्येष्वपि षष्ठ्यपवादत्वमात्रेण सम्बन्धार्थकताऽपि नोचिता ! तथासति कर्त्रादेरपि षष्ठ्यपवादत्वेन तृतीयादेरपि सम्बन्धार्थकत्वापत्तेः। तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैव औचित्यमिति। एवमेव यथाप्रयोगं बहूनान्धातूनां व्यापारद्वयार्थकत्वेन द्विकर्मकत्वं सिद्धम् भाष्यादिनीतम्। तत्र ये व्यापारद्वयार्थत्वेन सकर्मकास्तेषामप्रधानकर्मणि लकारादयः।

अत एव "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥" इति भाष्यसिद्धान्तोऽपि संगच्छते।

प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वादित्यादि प्रतिपादितमिति दिक्।

प्र० ४—प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ १।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥ २।

कारकप्रकरणे द्वितीयादौ "अनभिहिते" इत्यधिकारः प्रचलति । अतश्च अभिहिते 'उक्तार्थानामप्रयोगः' इति न्यायेन द्वितीयादेरप्राप्त्या प्रातिपदिकार्थमात्रे प्रथमाविभक्तिः सिद्ध्यतीति ।

नचैवम् 'पक्त्वौदनं भुंक्ते' इत्यत्रापि द्वितीया न स्यात् इति वाच्यम् ? अत्र पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, इति प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः । इदमेव फलयितुम्प्रमाणयितुञ्चोक्तकारिकाद्वयावतारः ।

एवञ्च यत्र द्रव्यस्य प्रधानेतरयोः क्रिययोर्द्वयोरुपस्थितिः तत्र गुणाश्रया [ गुणनिरूपिता ] शक्तिः प्रधानम् [ प्रधानक्रियानिरूपितां शक्तिम् ] अनुरुध्यते । अनुरोधमेव स्पष्टयति प्रधानविषयेति । गुणेऽनुक्तापि प्रधानविषया शक्तिः प्रत्ययेन अभिधीयते । तद्वत् [ उक्तवत् ] प्रतीयते । तुल्यन्यायाद् गुणनिरूपिता उक्तापि प्रधाननिरूपितानुक्तशक्तिवत् प्रकाशत इति । अत एव प्रासाद आस्त इत्यादौ सदिनिरूपिताधिकरणत्वस्योक्तत्वेऽपि आसिनिरूपितस्यानभिधानेनानभिहितत्वात् सप्तमी सिध्यति । स्पष्टितञ्चैवम् "स्वादुमि णमुल्" सूत्रे भाष्ये । अत एव 'पक्त्वौदनो भुज्यते' इत्यत्र पचेरप्राधान्यात् भुजिप्रत्ययेनाभिहिते प्रथमैव भवति ।

वस्तुतस्तु 'पक्त्वा भुज्यत' इत्यादौ कर्मणः पचिभुजिभ्यां न युगपच्छाब्दोऽन्वयः किन्त्वन्यतरेण शाब्दोऽपरेणार्थः । तत्र प्रथमाद्वितीये व्यवस्थिते एव । इति विवक्षाभेदेन पूजयितुं शक्यते हरिर्हरि वेत्युभयं साध्विति प्राञ्चः ।

नव्यास्तु उभयनिरूपितशक्तेरनभिधाने गुणक्रियानिरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवतीति । यथा ग्रामाय गन्तुमिच्छति ग्राममिति, वा इष्यते ग्रामो गन्तुमित्यादौ प्रधानेऽपि क्रियानिरूपितशक्तेरभिधाने गुणनिरूपिताया अप्यभिधानान्न कदापि चतुर्थीद्वितीये । एवञ्च कैयटादिप्रामाण्यात् आवृत्त्योभयत्र शाब्दान्वयोऽङ्गीकार्य एव । तथा चैतद्विरोधादोदनम्पक्त्वेत्यपास्तमेवेति नव्यमतमेव साधीयोऽन्यथा भाष्याद्यसंगत्यापत्तेः ।

प्र० ६—कर्मसंज्ञाविधायके "कर्तुरीप्सिततमङ्कर्म" इत्यत्र वर्त्तमानार्थक्तेन योगे "क्तस्य च वर्त्तमाने" इति षष्ठी । एवञ्च कर्त्राऽऽप्तुमिष्यमाणङ्कर्मेत्यर्थः । कर्त्ता च धातूपात्तव्यापाराश्रयः । केनाप्तुमिच्छतीत्याकाङ्क्षायां कर्तृपदार्थविशेषणीभूतेन "उपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभाव" न्यायेन व्यापारेणेत्यर्थाल्लभ्यते ।

अत्र सूत्रे "कर्तुराप्ततमं कर्म" इतिन्यासे 'काशीं गच्छन् पथि मृतः' इत्यत्राधिकरणत्वम्प्रबाध्य पथः कर्मत्वोपरागेण द्वितीयापत्तिः । नच काशीङ्गच्छति न प्रयागमिति प्रयोगे प्रयागस्योत्तरदेशसंयोगानुकूलव्यापाराश्रयत्वाभावेन कथङ्कर्मत्वमिति वाच्यम् ? गम्धातोस्संयोगानुकूलव्यापारे शक्तेस्सत्त्वेन संयोगेनारोपितसंयोगवास्तविकसंयोगयोर्ग्रहणेन "आरोपितत्वञ्चभूयोत्स्यम्" इतिन्यायेन प्रकृते च नञस्सत्त्वेन तत्सिद्धेः । संयोगाभावरूपफलाश्रयत्वाच्च प्रयागस्य कर्मत्वोपपादनात् । अत्र च

सूत्रे कटं करिष्यति कटं कृतवान् इत्यादौ कर्मत्वसिद्धये क्तप्रत्ययोपात्तवर्त्तमानत्वमविवक्षितमेव।

नचैवम् "क्तस्य च वर्त्तमाने" इतिषष्ठी न स्यादिति वाच्यम्? "गमेरिट्" इत्यत्र परस्मैपदग्रहणस्य तङानयोरभावपरत्ववत्तत्र वर्तमानपदस्य भूतभविष्यत्कालाबोधजनकपरत्वेन "वर्तमाने" इत्यधिकृत्य विहितस्य क्तस्येत्यर्थेनादोषात्। वर्तमानत्वन्नैव विवक्षितमित्यस्य वर्तमानत्वावच्छिन्नविषयताकबोधनाय न विवक्षितमित्यर्थेनादोषाच्चेति दिक्।

प्र० ६—वृत्तिकारैर्हि प्रागुभिः प्रातिपदिकार्थस्सत्ता, प्रवृत्तिनिमित्तमिति तात्पर्यम्। तद्व्याचक्षाणाश्च योऽर्थस्सन्नेव केवलं भासते न जात्यादिरूपो न च लिङ्गसंख्याकारकयोगी स विवक्षित इति। यथाऽव्ययार्थो हि केवलमस्तीति वक्तुं शक्यते न पुनरीदृश इतीति तत्सर्वमयुक्तम्। तथाहि-उच्चैर्नीचैरित्यादिशब्दानामव्ययानां सत्वित्याकारकप्रतीतिजनकत्वस्य कुत्रापि तन्त्रेऽस्वीकृतेः। असत्त्वार्थकेषु अस्त्यादिसामानाधिकरण्याभावस्य सुलभत्वेन प्रकृते अस्तिसामानाधिकरण्येनापि निर्वाहो दुरुपपादः। लिङ्गसंख्याकारकेति स्वोक्तिविरोधाच्च।

नचैवमपि पदान्तरोपस्थापितस्य उच्चैर्गृहमस्तीति सत्त्वमस्तिसामानाधिकरण्यस्येति वाच्यम्? तस्य अव्यावर्त्तकत्वात्। तत्सत्त्वे लिङ्गसंख्यादेरपि सम्भवेन "न पुनरीदृशस्तादृश" इति स्वोक्तवाक्यशेषविरोधस्य दुष्परिहरत्वापत्तेश्च।

एवमेव कृष्णः श्रीरित्यादावव्याप्तिरपि स्यात्। मात्रशब्देनाधिकव्यवच्छेदाच्च न लिङ्गग्रहणात्तत्सिद्धिरिति तेषाम्मतमयुक्तमिति।

प्र० ७—ननु प्रासाद आस्ते इत्यत्र प्रथमाविभक्तिःकुतो नेत्याशंक्य "तिङ्समानाधिकरणे प्रथमा" इत्युक्तमुत्तरम्भाष्ये। अत एव च "इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते" इति ब्रुवते शास्त्रज्ञाः। तस्य च यदि क्रियानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकात् प्रथमेत्यर्थस्तदा राहोशिर इत्यत्र राहुपदादपि सा दुर्वारैव स्यात्। यदि च क्रियानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकात् प्रथमेत्यर्थस्तदा घटोऽस्तीत्यादौ सत्तानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकत्वस्य तिङर्थ एव सत्त्वेन तदनापत्तिरितिचेत्? कारकाधिकारीयविभक्तिमात्रातिरिक्तशेषे षष्ठीत्यादिविहितविभक्त्यतिरिक्तविभक्तौ चिकीर्षितायां क्रियानिष्ठविशेष्यतानिरूपितसाक्षात् परम्परया वा प्रकारताप्रयोजकात् प्रथमेति वर्णनेन दोषाभावात्।

नचैवम् उच्चैरादिभ्योऽधिकरणशक्तिप्रधानेभ्यः कथम्प्रथमा, तेषामस्तिसामानाधिकरण्यदौर्लभ्यादिति वाच्यम्? "अभितस्सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न" इति भाष्यात्तिङ्सामानाधिकरण्योपपादनात्। अधिकरणशक्तिप्रधानकानामपि अभेदान्वयबोधप्रयोजकपदसमभिव्याहारे शक्तिमत्प्रधानत्वेन सामानाधिकरण्यसौलभ्यादिति दिक्।

प्र० ८—ननु बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वाद् यथा कल्पबादिप्रत्यया न भवन्ति "उक्तार्थानामप्रयोग"न्यायात् तथैवेहापि क्रियते कट इत्यादावपि तिङादिभिरुक्तत्वात् द्वितीया नापद्यते । एवमेव कटं करोतीत्यादौ लब्धावकाशा द्वितीया कृतः कट इत्यादौ निरवकाशत्वेनापवादभूतया प्रथमया बाधिष्यत एवेति । नच वृक्ष इत्यादौ सावकाशा सेति वाच्यम् ? तत्रापि प्रतीयमानामस्तिक्रियाम्प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् "तिङ्समानाधिकरणे" इति भाष्यसिद्धान्तात् । नच विशेषणान्तरनिवृत्त्यभिप्रायके अस्तिक्रियाया अनावश्यकत्वेन नीलमेतत्तु रक्तमित्यादौ प्रथमा सावकाशेति वाच्यम् ? तथापि विप्रतिषेधादेव प्रथमासिद्धेरुपपाद्यत्वात् , इत्यनभिहिताधिकारवैयर्थ्यमिति चेदत्रोच्यते-"द्व्येकयोः, कर्मणि, स्वौजसमौट्" इत्यादेरेकवाक्यतयाऽन्वये कर्मणीति सप्तम्या "द्व्येकयोः" इतिसूत्रोपात्तैकत्वाद्यपेक्षत्वात् कर्मणि यदेकत्वन्तत्रामिति हि सा विभक्त्यर्थ इति पक्षे सूत्राधिकारस्यावश्यकत्वात् ।

सत्यधिकारसूत्रे तु अनभिहिते कर्मणि यदेकत्वमित्यर्थं क्तेन कर्मोक्तौ कृतःकट इत्यादौ न दोषः गुणानाञ्च परार्थत्वादिति न्यायस्तु साकाङ्क्षातिरिक्तस्थलीय एवेति नेह तत्प्रवृत्तिः ।

एवञ्चाप्रधानकर्मादिविशेषणार्थं सूत्रावश्यकता, उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय एवेति । कर्त्तव्यः कट इत्यादौ प्रथमातोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात् परत्वात् प्रथमेति तु युक्तिशून्यमेव ।

वस्तुतस्तु उक्तार्थन्यायाश्रयणेन सूत्रमिदम् "अनभिहिते" इति प्रत्याख्यातमाकर इति दिक् ।

प्र० ९-ननु "प्रातिपदिकार्थ" सूत्रे "एकद्विकन्त्रिकञ्चाथ चतुष्कम्पञ्चकन्तथा । नामार्था इति सर्वेऽमी पक्षाश्शास्त्रे निरूपिताः ॥" इति रीत्या त्रिकादिपक्षे लिङ्गादिग्रहणव्यर्थमेवेति चेन्न ? नियतोपस्थितिकःप्रातिपदिकार्थः इति सिद्धान्तेनाविरोधात् । नियता उपस्थितिर्यस्येति विग्रहः, व्यापकत्वविशिष्टोपस्थितिनिरूपितविषयताश्रयत्वसमासार्थः । यद्विषयकोपस्थितिर्व्यापकत्वविशिष्टेति विग्रहार्थः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिस्स प्रातिपदिकार्थ इति केचित् । नियतत्वञ्च व्यापकत्वमर्थः" इत्थम्भूतलक्षणतृतीयार्थो वैशिष्ट्यं स्वरूपेण, सप्तम्यन्तयत्पदार्थस्योच्चारिततत्पदार्थेऽभेदेन प्रातिपदिकपदार्थे, तस्य सप्तम्यर्थनिरूपितत्वेन व्यापकत्वपदार्थे, तस्य च स्वरूपेणोपस्थितौ, यत्पदार्थस्य वृत्तित्वेन षष्ठ्यर्थविषयत्वे, तस्य निरूपितत्वसम्बन्धेनोपस्थितावन्वयः ।

एवञ्च यदभिन्नोच्चारिताभिन्नप्रातिपदिकनिरूपितव्यापकत्वविशिष्टा यन्निष्ठविषयतानिरूपकोपस्थितिस्स प्रातिपदिकार्थः । व्यापकत्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । व्याप्यत्वञ्च स्वाभावाधिकरणनिरूपितवृत्तित्वाभाववत्त्वम् । क्तार्थं आश्रयत्वन्तत्र स्वरूपेण विषतायां अन्वयः, एवञ्च य-

दभिन्नोच्चारिताभिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिनिरूपितविषयताश्रयोऽर्थः । तत्त्वञ्च प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वम् वै० च स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितानुयोगितानिरूपितशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्वज्ञानाधीनोपस्थितिप्रयोज्यत्वसम्बन्धाभ्यामिति ।

परन्तु अपदार्थसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतारूपप्रवृत्तिनिमित्तन्तदाश्रयश्च प्रातिपदिकार्थः । तथाच लिङ्गग्रहणञ्चरितार्थम्' तटादिशब्दानामपि लिङ्गं वाच्यमेव । तद्द्योतकास्तु विसर्गादयः प्रातिपदिकार्थं इत्यस्यालिङ्गाः लिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययमुपादाय उदाहरणानि । अन्ये लिङ्गाधिकस्य । एवञ्च परिमाणग्रहोऽपि सफलः ।

वस्तुतस्तु "तिङ्समानाधिकरणे" इति भाष्यमते न द्रोणो व्रीहिरुदाहरणं किन्तु द्रोणः खारी आढकमित्यादि ।

मनोरमाकारास्तु "अर्थे प्रथमा" इति न्यासः, कस्यार्थे इत्याकाङ्क्षानिवृत्तिस्तु यस्माद् विधीयन्ते स्वादय इत्येवं स्यात् । एको द्वौ इत्यादि तु "न केवला प्रकृतिः" इति भाष्यसिद्धान्तेन सिद्धम् । अनन्विताथर्त्वाच्च नान्या विभक्तिरुत्पत्स्यत इति न्यास एव भाष्याभिमत इति वदन्ति । अनर्थकनिपातेभ्यः प्रथमोपपत्तये मात्रग्रहणम् । सति चास्मिन् कर्मादियोग्यार्थकप्रातिपदिकाच्च सद्गृहितत्वार्थ एवेति न दोष इति । अर्थनियमपक्षे तु मात्रग्रहणं "सम्बोधने च" इत्यत्र भाष्ये प्रत्याख्यातमितिदिक् ।

प्र० १०—ननु भोक्ता भोजक इत्यादाविव "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोश्च प्रत्ययार्थः प्रधानम्" इति न्यायेन तिङन्तेऽपि देवदत्तो भुंक्ते इत्यादावपि प्रथमान्तार्थमुख्यविशेष्यकः । तार्किकाभिमतसिद्धान्तेन यत्किञ्चिद्भक्ष्यकर्मकगलबिलाधस्संयोगानुकूलव्यापारानुकूलकृतिमान् देवदत्त इति बोधो योग्य इति चेन्न ? "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्काचार्यसिद्धान्तानुसारेण क्रियामुख्यविशेष्यकबोधस्यैवार्हणीयत्वात् । धातूपस्थापिता क्रिया तिङर्थम्प्रति विशेष्या नतु कृदर्थम्प्रतीव विशेषणमिति हि तदर्थः । अत एव पाचको व्रजतीतिवत् पचति व्रजतीति नैकवाक्यम् । पश्य मृगो धावतीति वाक्यात् मृगकर्तृकगमनानुकूलव्यापारकर्मकत्वत्कर्तृकदर्शनानुकूलव्यापार इति बोधः ।

अत्र च शाब्दिकमते एकवाक्यत्वं भाष्याभिप्रेतं सिध्यति । तार्किकादिमते च बोधद्वयसत्त्वेन तदसम्भवापत्तेः । अतएव "सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् । तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥" इति कारिकाऽपि संगच्छते । मृगस्य कर्मतयाऽन्वयेन च न निर्वाहः ? द्वितीयापत्तेरप्रथमासामानाधिकरण्ये शत्राद्यापत्तेश्च । अध्याहारे गौरवाच्च न वाक्यभेदो मुन्यादिवचनविरोधाच्च । क्रियाप्रधानमित्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोध्यत इति न

इत्यादिकम्प्रति धावनादेर्विशेषणत्वेऽपि क्षतिरिति दिक्।

प्र० ११—कर्मसंज्ञाविधायके "अकथितञ्च" इति सूत्रे "अर्थनिबन्धनेयं संज्ञा" इत्युक्तं कौमुद्याम्। अर्थो निबन्धनं निमित्तं यस्यां साऽर्थनिबन्धना नतु स्वरूपाश्रया। प्रमाणञ्चात्र "तद्राज" सूत्रे भाष्ये अहमपीदमचोद्यं चोद्ये इति प्रच्छधातुपर्यायस्य चुद्धातोरपि द्विकर्मकत्वदर्शनात्। अतएव 'स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्' इति भट्टिः, 'शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव' इति कालिदासः, 'उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः' इति भारविश्च सङ्गच्छन्ते इति मनोरमाकाराः। शब्दरत्नकारास्तु—"आख्यातोपयोगे" इति सूत्रे "दुह्याच्" इति परिगणनभाष्ये याचधातोः पृथग् भिक्षिग्रहणाज् ज्ञाप्यतेऽयं सिद्धान्त इति। अन्यथा परस्वत्वनिवृत्तिपूर्वकपरस्वत्वो-त्पत्त्युभयानुकूलव्यापारार्थकस्य [ इदमवश्यं करोमीति प्रतिज्ञावाक्यप्रयोजनकज्ञानविशेषरूप ] स्वीकारानुकूलव्यापारार्थस्य चेत्युभयस्य याचेस्तत्र ग्रहणेन प्रथमार्थकया-चिग्रहणेनैव गतार्थत्वाद् भिक्षिग्रहणवैयर्थ्यं स्यात्। एवञ्च परिगणनातिरिक्तानां येषाम्पाठ आवश्यको विभाति द्विकर्मणान्तेषां "कर्तुः" सूत्रेणैव व्यवस्थितिः। अत एव "प्रधानकर्मण्याख्येये" इति लकारादिव्यवस्थापको भाष्यसिद्धान्तोऽपि सङ्गच्छते। अत एव च "नीवह्योर्हरतेश्चापि" इति द्विकर्मकपरिगणनं साधीय इति। एवञ्च अर्थिनश्च राजानो भवन्ति हिरण्येन इति गर्गाश्शतन्दण्डयन्तामिति च भाष्य-प्रयोगद्वये न क्षतिरिति दिक्।

प्र० १२—ननु "कर्त्तुरीप्सिततमम् तथायुक्तंचानीप्सितम्" इत्येतत्सूत्रद्वयापेक्षया लाघवाद् "धातूपात्ताप्यफलशालिकर्म" इत्येकेनैव निर्वाहसम्भवे व्यर्थं ते इति चेन्न ? ग्रामं गच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते, एतत्सूत्रबोध्यकर्मत्वश-क्त्युद्देश्यतासमानाधिकरणत्वात्। अत एव "कर्मणा यमभिप्रैति" इति सूत्रे कर्मणे-त्यस्याभावे गान्ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण सम्प्रदानसंज्ञा स्यादिति भाष्यकैयटोक्तं संगच्छते। अथ च ईप्सिततमत्वस्याभावे अग्नेर्मा-णवकं वारयतीत्यत्र "वारणार्थानाम्" इत्यनेनापवादत्वात् कर्मसंज्ञाया बाधेनापादान-त्वापत्तिः। सतीप्सिततमग्रहणे त्वीप्सितमात्रेऽग्नौ सावकाशेनानेनापादानसंज्ञाविधा-यकेन न बाधसम्भव इति शब्दरत्नसिद्धान्तात्।

ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम्। एवञ्च द्वेष्योदासीनसंग्रहार्थम् "तथा युक्तञ्च" इदमपि कर्त्तव्यम्। अनीप्सितग्रहणन्तु स्पष्टार्थमेवेति। ईप्सितानीप्सितयोः शाब्दबोधस्त्वेकरूप एव। ईप्सानीप्सादेरविशो-षादिवत् संज्ञाप्रवृत्तावुपयोगेऽपि द्वितीयावाच्यकोटावप्रवेशात्। अनन्यलभ्यो हि शब्दार्थं इति न्यायात्। सर्वत्रापि कर्मसु विहितद्वितीयानामाधारवाचकत्वम् लाघ-वात्। प्रकृतिप्रत्ययार्थयोश्चाहाभेदसम्बन्धः। तथाच हर्याधारिका या प्रतीतिस्तदनु-

कृत्लो व्यापारो वाक्यार्थत्वेन निर्णीयते इत्यादि प्रपञ्चितम्मनोरमाकृतेह संक्षेपतो व्याख्यातम्।

प्र० १३—कर्मसंज्ञाविधायके "दिवः कर्म च" इत्यस्याकडारीयत्वेऽपि करण-शब्दानुवृत्त्या "परिक्रयणे सम्प्रदानम्" इत्यतोऽन्यतरस्यां ग्रहणापकर्षणेन वा संज्ञयोः पर्य्याये लब्धे समावेशार्थश्चकारः। तेन मनसा देव इत्यत्र कर्मण्यण्प्रत्ययः करणे तृतीया चेत्युभयमपि सिद्ध्यति। नचात्र समासे सुब्लुक् शङ्कनीयः ? तथापि "मन सस्संज्ञायाम्" इत्यलुग्विधानात्। नच तथापि मनसा देव इत्ययुक्तं कृद्योगलक्ष-णषष्ठीप्राप्तेः। नच तत्र कर्तृसाहचर्यात् मुख्यव्यवहृत्या धात्वर्थाश्रयकर्मण एव ग्रहणे स्तोकम्पाकादिवत् न षष्ठीति वाच्यम् ? आकडारसूत्रीयकैयटानुरोधात् धात्वर्थे भेद-सम्बन्धेनान्वयिकर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ प्रमाणाभावात् सा दुर्वारेति वाच्य-म् ? अत एव अक्षैर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादण्यि कर्त्तुर्णौ कर्मत्वाभावस्य "अणावकर्मकात्"इति परस्मैपदाभावस्य च फलत्वेनोपादानात्।

यत्तु अन्यत्र सावकाशयोः संज्ञयोर्द्वयोः अक्षैर्दीव्यति इत्यत्र संज्ञाद्वयप्रयुक्तकार्य-द्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्नतु द्वितीयेति तन्न ? कार्यकालपक्षे एकवाक्यतारीत्या द्वितीयाया अनवकाशत्वप्रतिपादनस्य युक्तत्वात्। दिवधात्वर्थनिरूपितसाधकतम-त्वशक्तेरेकत्वेन न देवना अक्षा इत्यादौ दोष इति दिक्।

प्र० १४—अयञ्च प्रश्नः पूर्वत्र २ द्वितीयप्रश्ने साधूत्तरसम्पत्त्या विभूषित इति तथैवावगन्तव्यः।

प्र० १५—"ज्ञोऽविदर्थस्य करणे, अधीगर्थदयेशां कर्मणि"इत्याद्यष्टसूत्र्यां शेष इत्यनुवर्त्तते। शेषत्वेन विवक्षिते च करणादौ षष्ठी प्रसिद्धैव। नचैवं शेषे षष्ठ्येव सिद्धेति असूत्रीयमव्यर्थेति वाच्यम् ? इह षष्ठ्येव भवति नतु तल्लुगिति ज्ञापनेन सार्थक्यात्।

एवञ्च लुकःप्रयोजकीभूतस्समास एव न भवतीत्यनुवदति "प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्"इति वार्त्तिककारः। तथाच हरिस्मरणमित्यादि शेषत्वा-विवक्षया कृद्योगषष्ठ्या समासेन साध्यम्। तत्र च कारकपूर्वकत्वात् कृदुत्तरपदप्रकृ-तिस्वरः, शेषषष्ठ्या समासे त्वनिष्टान्तोदात्तत्वापत्तेः।

किञ्च आदिकर्मणि कर्त्तरि क्ते मातुःस्मृतमित्यत्र समासाऽभावोऽपि फलम्। अत एव "निष्ठायां कर्मविषया"इत्यादिकारिकीयसिद्धान्तोऽपि सङ्गच्छते। वृत्त्या-दिग्रन्थेषु चेहोदाहरणानि तिङन्त'न्येवेत्यादि सर्वमुपलक्षणतया नेयमिति दिक्।

प्र० १६—ह्रस्वविधायक "गोस्त्रियोः" इति सूत्रे प्राञ्चो "गोऽन्तस्त्रियोरुपसर्ज-नस्य" इति पठन्ति तन्न ? चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेऽपि तदन्तस्यातथा-त्वात्। न च गोपदार्थस्येव चित्रगो इति समुदायार्थस्य चित्राभिन्नगोरूपस्यान्यपदा-र्थोपसर्जनत्वमेवेति न दोष इति वाच्यम् ? तथापि गौरीपतिरित्यादौ अतिव्याप्तेर्दु-

र्जनत्वात् । नचैवम् सुगोकुलम् राजकुमारीपुत्र इत्यादि कथमिति वाच्यम् ? उपसर्जनस्य ससम्बन्धिकतया ह्रस्वो यस्य प्रातिपदिकस्य विधीयते तदर्थम्प्रति उत्तरपदार्थो-र्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वमिति कथनात् । अत एव भाष्ये "अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ" इत्यादिभाष्यसङ्गतिरिति दिक् ।

प्र० १७—समासान्तविषये "अन्तः" इति सूत्रभाष्योक्त्या समासचरमावयव एव समासान्तपदार्थः । समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थस्तु "सरूपाणाम्" सूत्रे कैयटेन स्पष्टमभिहितः । तेन चोपशरदमित्यव्ययीभावसमासे "नाव्ययीभावात्" इति सूत्रेणाम्, द्विपुरीत्यादौ च "अकारान्तोत्तरपदो द्विगुःस्त्रियामिष्टः" इति वचनाच्च "द्विगोः" इति विहितो ङीप्प्रत्ययस्साधुरिति मनोरमाकाराः ।

शब्दरत्नकारास्तु—चिन्त्य एव कैयटाद्यभिमतः पक्षः ! समासपदस्य समासार्थोत्तरपदलक्षणायाम्प्रमाणविरहात् । समासपदेन "गोस्त्रियोः" इति सूत्रभाष्ये तदर्थवाक्यस्योपचारेण ग्रहणमित्यर्थस्यैव सिद्धान्तितत्वाच्च । एवम् तथात्वे "अन्तः" इति सूत्रस्थभाष्यीयोत्तरपदावयवत्वपक्षस्य विरोधोऽपि स्यात् ।

नच द्विपुरीत्यादावदन्तोत्तरपदत्वाभावात् ङीप्सिद्धिः कथं स्यादिति वाच्यम् ? लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्रत्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात् । अत एव "समासान्ताः" इति सूत्रे भाष्ये "लिङ्गमशिष्यं लोकाश्रयत्वात्" इति सङ्गच्छते । स्पष्टञ्चेदं सर्वमपि शब्दरत्ने इति दिक् ।

प्र० १८—पञ्चमीकारके "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति सूत्रं सूत्रकृदपाठीत् । तत्र निपातानामनेकार्थत्वेन अन्यतरस्यां ग्रहणं समुच्चयार्थम् । तथाच तृतीयाभावपक्षे "एनपा द्वितीया" इति द्वितीयैव स्यात् ।

यदि च सा विकल्पितेति तदा पञ्चम्यपि स्यात् । सा तु नित्यैवेति विभक्तिद्वयसमावेशः कुत इति परास्तम् । तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु सन्निहितैव । इह पृथगर्थैरिति सूत्रणीये पर्यायत्रयोपादानम्पर्यायान्तरनिवृत्त्यर्थम् । तेन हिरुग् देवदत्तस्येत्यत्र नेति केचिद् वदन्ति । पृथङ्नानाभिस्तृतीयाऽन्यतरस्याम् इति तु सुवचो न्यासः ! नानाञ् इति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात् इति दिक् ।

प्र० १९—ननु आराद् वनात् समया ग्रामम् इत्यादावव्ययीभावसमासः कुतो नेति चेन्न ! तथा सति "अन्यारादितरर्ते" इति पञ्चम्याः "अभितः परितस्समया" इति द्वितीयायाश्च विधानवैयर्थ्यापत्तेः । एतच्च रचितग्रन्थे ।

यत्तु चैत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चारितार्थ्याद् विधानसामर्थ्यं नास्तीति तन्न ! नित्यसमासस्य स्वाभ्युपगमे सति चैत्रस्येत्यादिविशेषणायोगात् ।

अत एव भाष्ये "सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न" इत्युक्तम्

इति चेत् ? तदनित्यसमासविषयम्, नित्यसमासस्यापि सविशेषणेष्वप्रवृत्तौ महतः कुम्भस्योप इत्याद्यापत्तेः ।

शब्दरत्नकारास्तु—मध्यार्थकसमयायोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्याच्च तच्चिन्त्यमेव सामर्थ्यकल्पनया वारणमिति दिक् ।

प्र० २०—सम्प्रदानसंज्ञाविधायकं "कर्मणा यमभिप्रैती"ति सूत्रञ्चतुर्थीकारकप्रकरण आदौ एव स्थापितम् । तस्य च दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञो भवतीत्यर्थः ।

मनोरमायां दानस्येति प्रतीकमुपादाय तेन अजाश्चयति ग्रामं, हस्तं निदधाति पृष्ठे इत्यादौ नातिप्रसङ्गः । दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति, इति वृत्तिमतम् ।

भाष्ये तु खण्डिकोपाध्यायस्तस्मै चपेटान्ददातीति प्रयोगात् नान्वर्थतायामाग्रहः । रजकस्य वस्त्रन्ददातीति तु शेषत्वविवक्षयाऽपि साधयितुं शक्यम् ।

नचैवमजां नयति ग्राममिति इहापि प्रसङ्गः ? यमभिप्रैतीत्युक्त्या यमिति निर्दिष्टस्य शेषित्वं कर्मणश्च शेषत्वमिति लाभेन ग्रामस्याजाम्प्रति शेषित्वाभावादिति ।

शब्दरत्नकारास्तु—यद्यपि ग्रामसंस्कारार्थमजानयने तदपि ग्रामस्यास्ति तथाप्यजाया इव परत्वात् कर्त्तुः इति कर्मसंज्ञया बाधान्न दोष इति वदन्ति ।

इति तृतीयखण्डः ।

॥ श्रीः ॥

# वैयाकरणभूषणसारे प्रश्नाः ।

## १९४४

१ चैत्रस्तण्डुलं पचतीत्यत्र पदार्थतत्सम्बन्धनिर्देशपूर्वकं सिद्धान्तसम्मतं बोधं प्रदर्श्य प्रथमान्तमुख्यविशेष्यकबोधं निराकुर्वन्तु प्रतिपादयन्तु च पच्यते तण्डुलश्चैत्रेणेत्यत्र प्राङ्नव्यमतभेदेन वाक्यार्थबोधम् । .... १०

२ व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥
इयं कारिका भूषणोक्तदिशा व्याख्येया । किञ्च फलव्यापारौ फलत्वेन व्यापारत्वेन धातुवाच्यौ संयोगत्वादिना यत्नत्वेन वा, प्रथमे तत्तद्धातुजन्यबोध संयोगादियत्नादिसंदेहानिवृत्तिः, द्वितीये नानार्थतापत्तिः कथं परिहरणीया । ... १०

३ लिङ्गस्य नामार्थत्वं सयुक्तिकं प्रतिपाद्य शब्दोऽपि नामार्थो न वेति साधूपपादयत । ... १०

४ स्वातन्त्र्यक्रियावाचकत्वैकवाक्यत्वानां मध्ये द्वयोर्लक्षणं निर्दुष्टं परिष्क्रियताम् । ... १०

५ लक्षणायाः शक्तेश्च स्वरूपं निरूप्य लक्षणाया वृत्त्यन्तरत्वं निराचष्टाम् .... १०

६ वाक्यस्फोटजातिस्फोटयोः स्वरूपं विलिख्य वाक्यार्थस्यापूर्वत्वात्तत्र शक्तिग्रहासम्भवेन कथं वाक्यस्फोटः साधनीय इति प्रतिपाद्यताम् । ... १०

७ एकमित्यस्य चायमभिप्रायः । शक्तिज्ञाने च विषयतयावच्छेदिका जातिरेकैवेति । तथा च घटत्वप्रकारकविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्य्यकारणभाव इति मूलम् ।
व्याख्यायतामेष ग्रन्थः, घटत्वांशेऽन्याप्रकारकत्वं च किम् । ... १०

सूचना—एतेषां प्रश्नानां केचन पञ्च समाधेयाः ।

---

## १९४५

१ तस्मात् करोतिर्धातोः स्याद् व्याख्यानं, न त्वसौ तिङाम् ।
पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥
इयं कारिका ग्रन्थच्छायामाश्रित्य व्याख्येया । तत्र च "सम्बन्धमात्र"-

मित्यादिना दर्शितभाट्टरीतेः प्रकृते क उपयोगः, का च सा, कथञ्च निराकृता । किञ्च घञादेर्व्यापारवाचकत्वाश्रयणे "ग्रामो गमनवानि" त्यापत्तिवारणेऽपि 'ग्रामः संयोगवानि'ति कथमुपपद्यते ? ... १३

२ लिङर्थे वादिमतं निराकृत्य स्वमतं दर्शय । किञ्च "अस्ति ककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावेन प्रवृत्तेर्व्यभिचाराच्चे"तिग्रन्थो व्याख्येयः । .... ७

अथवा

सोदाहरणं कर्मभेदं निरूप्य अपादानत्वं भूषणसारदिशा निष्कलङ्कं परिष्कुरुत ।

३ समासादिवृत्तिषु, अतिरिक्तैकार्थीभावशक्तिं साधय, "अत एव 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरताभङ्गापत्ते"रितिग्रन्थाशयं च लिख । ... १२

४ अपभ्रंशानां साक्षाद् वाचकत्वं परम्परया वेति साधूपपादयत । ... ८

५ निपातानां द्योतकत्वं वाचकत्वं वेति सयुक्तिकं सङ्क्षेपेण लिखत । ... १०

अथवा

देवताप्रत्ययार्थं निरूप्य क्त्वाप्रत्ययार्थं निरूपयत ।

---

१९४६

सूचना—एषु पञ्चैव समाधेयाः । द्वितीयो न हेयः ।

१ कर्तृकर्मणोराख्यातार्थत्वे मानं प्रदर्श्य 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' अस्यात्र क उपयोग इति स्फुटं प्रतिपाद्यताम् । ... १०

२ सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः ।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥

कारिकामिमां विशदं व्याख्याय, सारोक्तदिशा मुनित्रयाभिमतमेकवाक्यत्वं परिष्कुरुत । ... १०

३ समासशक्तिविषये व्यपेक्षावादिमतं निरस्य स्वमतं स्थापयत । ... १०

४ लिङर्थं निरूप्य परमतनिरसनपूर्वकं स्वमतेन चैत्रश्चैत्रं गच्छतीति प्रयोगो वारणीयः । ... १०

५ लक्षणास्वीकारे कानि कानि दूषणानीति स्फुटं प्रतिपाद्य, न चान्यवहितोत्तरत्वसम्बन्धेन तत्तदुपस्थितिमत्त्वं कार्यतावच्छेदकम् , तत्तदुपस्थिति-

स्वञ्च कारणतावच्छेदकमित्यस्य कोऽभिप्रायः, कीदृशश्चैतन्मते कार्य-
कारणभावः ? इति निरूप्यताम् । ... १०

६ नञर्थं स्फुटमुपपादयत। ... १०

७ पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ॥
कारिकैषा सप्रयोजनं व्याख्येया । अखण्डस्फोटं चोपपादयत । .... १०

---

१६४७

सूचना—केऽपि पञ्च समाधेयाः ।

१ भावनायास्तिङर्थत्वे दूषणमभिधाय तस्या धातुवाच्यत्वे मानं प्रद-
र्श्यताम् । ... १०

२ निर्दुष्टं वर्तमानत्वं परिष्कृत्य करणतृतीयार्थो निरूप्यताम् । ... १०

३ शब्दस्य प्रातिपदिकार्थत्वं सारोक्तदिशा स्फुटं निर्दिश्यताम् । .... १०

४ अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
क्लृप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ॥
कारिकामिमां व्याख्याय ग्रन्थेन सङ्गतिः प्रदर्शनीया । ... १०

५ शक्तिस्वरूपं निपुणं निरूप्यताम् । .... १०

६ निपातानां द्योतकत्वं वाचकत्वं वेति विशदं विविच्यताम् । .... १०

७ वाक्यस्फोटं साधूपपाद्य स्फोटाङ्गीकारे का वाचोयुक्तिर्वैयाकरणाना-
मिति प्रतिपाद्यताम् । ... १०

---

१६४८

सूचना—यथेच्छं पञ्च प्रश्नाः समाधेयाः ।

१ परमतनिरसनपुरस्सरं कर्तृकर्मणोराख्यातार्थत्वं समर्थ्यताम् । .... १०

२ देवदत्त ओदनं पचतीत्यत्र वैयाकरणनैयायिकरीत्या शाब्दबोधप्रकारं
प्रदर्श्य लिङर्थो निरूप्यताम्। .... १०

३ नैयायिकमतं प्रतिक्षिप्य सारोक्तदिशा निर्दुष्टं कर्मत्वं प्रतिपाद्यताम् । ... १०

४ अपभ्रंशेषु शक्तिरस्ति न वेति विविच्यताम् । ... १०

५ 'अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥'

कारिकेयं ससङ्गति प्रौढ्या व्याख्यायताम्। ... १०
६ तुमादयः कस्मिन्नर्थे भवन्तीति विशदं निर्दिश्यताम्। ... १०
७ स्फोटस्वरूपं निरूप्य तस्याखण्डत्वाङ्गीकारे वाचोयुक्तिः प्रदर्श्यताम्। ... १०

# परिभाषेन्दुशेखरे प्रश्नाः।

१९४५

१ बोधकानवयवत्वसाधकानुमितिहेतुसंशयरूपपक्षतास्वरूपमुपन्यस्य अनुबन्धानां बोधकावयवत्वे का वाचोयुक्तिरिति सुस्पष्टमुच्यताम्। ... १०

२ "स्नात्वा कालकीकृत्य" "अपिबत्" इत्युभयलक्ष्यसाधारणं प्रतिपदऽव्याप्तिप्रदर्शनपूर्वकं निर्दिश्यमानत्वं निर्दिश्य कथं न तेन इयङ्वङोर्ङित्त्वस्य वैफल्यमिति निपुणमवधाय निरूपणीयम्। .... १०

३ "स्त्रीप्रत्यये चानुपसर्जनेने"ति परिभाषावतरणं सह शङ्कासमाधानाभ्यामुपपाद्य परिभाषार्थस्तत्रत्योपसर्जनत्वञ्चेति द्वयं साधु परिष्करणीयम्।.... १०

४ "पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इति परिभाषां सोदाहरणां व्याख्याय "विकरणेभ्यो नियमो बलीयान्" इति परिभाषां यथामूलं विवृणुत। ... १०

५ संज्ञाकृतबहिरङ्गत्वानाश्रयणे आपतितं विरोधमुद्धृत्य बहिरङ्गशास्त्रत्वस्य अन्तरङ्गपरिभाषाप्रवृत्त्यप्रयोजकत्वे युक्तिरभिधीयताम्। ... १०

६ "अन्तरङ्गानपी"ति परिभाषायामपिशब्दोपादानप्रयोजनप्रदर्शनपूर्वकं ज्ञापनप्रकारं प्रदर्श्य अन्तरङ्गनिमित्तविनाशकलुकः प्राबल्यबोधने फलं मानञ्च निरूपयत। ... १०

७ "श्तिपा शपाऽनुबन्धेने"ति परिभाषा मूलोक्तदिशा व्याख्यायताम्।... १०

सूचना—केचन पञ्चैव प्रश्ना उत्तरणीयाः।

१९४६

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः, द्वितीयपञ्चमाववश्यमुत्तरणीयौ।

१ "व्याख्यानतो विशेषप्रतिपत्तिः" इति परिभाषावतारहेतुभूताऽनिर्णयप्रयोजकसंशयस्वरूपं वैशद्येन प्रदर्श्य व्याख्येयपरिभाषाणां लक्षणं निर्दुष्टं निर्दिशत। ... १०

२ "यदागम"परिभाषा स्थानिवत्सूत्रेण गतार्थाऽगतार्था वेति साधु विविच्य यदागमपदस्य "यमुद्दिश्य विहित" इत्यर्थे ग्रन्थकृतोऽभिनिवेशः कस्मै फलायेति निपुणमवधाय निरूपयत । ... १०

३ गौणमुख्यन्यायस्य प्रातिपदिककार्येऽप्रवृत्तौ बीजमुपन्यस्य "निपातपदं तु चादित्वेनैव चादीनामुपस्थापक"मिति ग्रन्थग्रन्थिं सह सन्दर्भशुद्धया विस्फोरयत । ... १०

४ "एकदेशविकृतमनन्यवदि"ति परिभाषां व्याख्याय अस्यपरिभाषात्वं परिष्कुरुत । ... १०

५ "कार्यी निमित्ततया नाश्रीयते' इत्यस्मिन् नियमे जागरूके पट्वे त्यादौ कथं पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमिति शङ्कां समाधाय पूर्वस्थानिकमन्तरङ्गमित्याश्रयणे बाधकं प्रमाणमुल्लिख्य जातबहिरङ्गासिद्धत्वे मानं फलञ्च दर्शयत ।

६ "अकृतव्यूह" परिभाषायां मतद्वयेन ज्ञापकं निर्दिश्य नातिविस्तरेण तन्निराकरणप्रकारं लिखत । ... १०

७ "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति परिभाषां ग्रन्थकृदुक्तदिशा व्याख्याय अस्या वाचनिकत्वं न्यायसिद्धत्वं वेति समीक्ष्यताम् ।... १०

---

## १६४७

१ यथोद्देशे परिभाषायां पदैकवाक्यतयाऽन्वये का वाचोयुक्तिरित्यभिधाय "संज्ञाशास्त्रस्य कार्यकालपक्षे न पृथग् वाक्यार्थबोधः" इति ग्रन्थाशयं सुस्पष्टं विवृणुत । ... १०

अथवा

उभयगतिरिह भवतीति परिभाषां सह फलप्रमाणाभ्यां व्याख्याय "यत्तु संज्ञाशास्त्राणामि"त्यादिग्रन्थेन निर्दिष्टं कृत्रिमाकृत्रिमन्यायबीजमुपपाद्य निपुणं निराकुरुत ।

२ सपदकृत्यं निर्दुष्टं निर्दिश्यमानत्वं निर्दिश्य इयङुवङोर्ङित्त्वस्य साफल्यं प्रतिपादयत । ... १०

३ "वर्णाश्रये नास्ति प्रत्ययलक्षणमि"ति परिभाषायां ज्ञापकमुपन्यस्य, अस्याः प्रयोजनं "न लुमताङ्गस्ये"ति सूत्रेण कथं न निर्वहतीति स्फुटमालोच्य, वर्णप्राधान्यं परिष्कृत्य च क्वचिल्लक्ष्ये सङ्गमयत । ... १०

अथवा

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषायां प्रमाणं फलञ्च निपुणं निरूप्य कृदकृद्ग्रहणेऽस्या अप्रवृत्तौ बीजं प्रदर्शयत ।

४ विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गमिति मतं निरस्य पक्षद्वयेऽपि त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तौ युक्तिमुद्भावयत । ... १०

५ सन्निपातपरिभाषायां सर्वविधसन्निपातग्रहणे प्रमाणं फलञ्च प्रदर्श्य परिभाषाया अनित्यत्वे भाष्यपरिगणितानि प्रयोजनानि निर्दिशत । ... १०

---

१९४८

१ निर्दिश्यमानपरिभाषायां षष्ठी स्थाने योगेति सूत्रं प्रमाणतयोपन्यस्य, उच्चार्यमाणसजातीयमेव स्थानपदार्थेन युज्यते न तु प्रतीयमानमित्यर्थः प्रदर्शितः शेखरकृता । अत्रेदं पृच्छ्यते । एवकारपदस्य निर्दिश्यमानपदस्य च कुतो लाभः ? कश्च प्रतीयमानशब्दार्थः ? केन धर्मेण च साजात्यं गृह्यते ? कथञ्च तावन्मात्रोक्तौ सर्वेषां लक्ष्याणां सङ्ग्रह इत्येतत्सर्वं समाधाय फलानामन्यथासिद्ध्या परिभाषा खण्डयितुं शक्यते न वेति विचार्यताम् । ... १०

२ स्त्रीप्रत्यये चानुपसर्जने नेति परिभाषया शास्त्रावच्छेदेन निषेधः क्रियते उत लक्ष्यावच्छेदेनेति विषयबीजं दोषमुखेनोपवर्ण्य, अवतरणग्रन्थो व्याख्येयः । अपि चोपसर्जनत्वमत्र शास्त्रीयं लौकिकं वा ग्राह्यमिति सप्रमाणं निर्णीय निर्दुष्टं तत्स्वरूपं विविच्यताम् ।

अथवा

येन विधिस्तदन्तस्येत्यत्र स्वं रूपमित्यनुवृत्तेरेव अस्यापत्यमित्यादीनां सिद्धौ किमर्थं व्यपदेशिवदिति परिभाषा स्वीकार्या, कुतश्च आद्यन्तवदिति सूत्रेणागतार्थत्वम् ? स्वीकृतायाञ्चास्यां रामशब्दे जराशब्दत्वस्य दरिद्राधाताविवर्णान्तत्वस्य देवदत्तपुत्रे यज्ञदत्तपुत्रत्वस्य कुतो नातिदेश इत्येतत्समाधानं स्फुटं प्रतिपाद्यताम् ।

३ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति परिभाषा भाष्यकृन्मते वाचनिकी ज्ञापकसिद्धा वा । आद्ये एवं तर्ह्यत्रत्यमपर्यन्तानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृत इति ग्रन्थसङ्गतिः सर्वादेशवारणाय चारितार्थ्यसम्भवश्च । द्वितीये इदं ज्ञापकं वार्तिकरीत्या भाष्यरीत्या तु वाचनिक

एवायमर्थं इत्युत्तरग्रन्थासङ्गतिरित्येतच्छङ्कापरिहारो येन प्रकारेण स उपपाद्यताम् । .. १०

४ अकृतव्यूहाः पाणिनीया इत्यस्याः परिभाषायाः प्रत्याख्यानप्रकारप्रमाणमुपपाद्य स युक्तो न वेति विचार्यताम् । ... १०

५ प्रातिपदिकग्रहणे इत्यस्याः परिभाषाया अप्रवृत्तिस्थलानि सोदाहरणानि प्रदर्श्य दोषापादनपुरस्सरं परिभाषार्थः परिष्करणीयः । ... १२

---

# महाभाष्यस्यादित आह्निकचतुष्टये प्रश्नाः ।

## १९४५

१ "अथ शब्दानुशासनमि"त्यत्र शब्दपदार्थो भाष्यरीत्या दर्शनीयः ।... ६

अथवा

"रक्षोहागमलघ्वसन्देहाः प्रयोजनमि"ति भाष्यं व्याकुरुत ।

२ "इको गुणवृद्धी"इति सूत्रे सम्भवतः पक्षानुपपाद्य निराकृत्य च सिद्धान्तपक्षं स्थापयत । ... ६

३ "प्रत्येकं संयोगसंज्ञे"ति पक्षन्निराकृत्य, "ऋलृवर्णयो"रिति वार्त्तिकं प्रत्याख्येयम् ।

---

## १९४६

१ "सिद्धे शब्दार्थसंबन्धे"इति वार्तिकम्प्रसङ्गनिर्देशपुरःसरं व्याख्यायताम्। ७

अथवा

"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवती"ति श्रुतौ किं ज्ञाने फलप्राप्तिरुत प्रयोग इति सम्यग् विविच्यताम् ।

२ प्रत्युच्चारणं वर्णानाम्भेदो नवेति भाष्यरीत्या विविच्य, भेदपक्षे सर्वेषामुदात्तादीनां ग्रहणोपपत्तिश्चिन्तनीया । ... १०

३ "वृद्धिरादैजि"ति सूत्रे संज्ञाधिकारङ्खण्डयित्वा, संज्ञासंज्ञिभावः सुष्ठूपपादनीयः । ... ८

४ "नाज्झलौ"विति सूत्रे ग्रहणकशास्त्रप्रवृत्त्या परश्शतानीत्यत्र दोष उद्भाव्य परिह्रियताम् । ... ६

---

१९५७

१ "अथ शब्दानुशासनम्" इत्यस्य वाक्यस्यार्थं पक्षान्तरनिरसनपुरःसरं विधाय व्याकरणस्य प्रयोजनानि संक्षेपेण निरूप्य च तेषां वर्गद्वयकरणे हेतुरुपन्यस्यताम् । ... ८

२ स्वसदृशवर्णान्तरेण वर्णैकदेशानां ग्रहणाग्रहणयोर्गुणदोषौ विचार्य्य सिद्धान्तः स्थापनीयः । ... ८

३ "इको गुणवृद्धी" इतिसूत्रस्थवृद्धिग्रहणस्य प्रयोजनं सम्यगुपपाद्य "यच्च करोत्यकारग्रहणं लघोरिति कृतेऽपि" अस्याः पङ्क्तेराशयः स्पष्टतया वर्णनीयः । ... ८

४ "दीधीवेवीटाम्" इतिसूत्रम्भाष्यरीत्या प्रत्याख्यायताम् ।

अथवा

"इको गुणवृद्धी" इति परिभाषायाः फलं महाभाष्योक्तं सविस्तारं निरूप्यताम् । ... ६

---

१९५८

१ व्याकरणपदार्थम्भाष्यरीत्या विविच्यान्तरेण व्याकरणं शब्दानुशासनन्न सम्भवतीति स्पष्टं प्रतिपाद्यताम् । .... ८

२ वर्णानामर्थवत्त्वमनर्थकत्वं वेति सयुक्तिकं विविच्यताम् ।

अथवा

हयवरट् सूत्रे रेफस्य यकारवकाराभ्याम्पूर्वोपदेशे दोषानुद्भाव्य परोपदेशः स्थापनीयः । ... ७

३ वृद्धिरादैच् सूत्रे आदिति तपरकरणस्य फलं कम्यक् प्रदर्श्य, तद्भावितातद्भावितयोः कस्य ग्रहणमिति विवेचयत । ... ७

४ स्वरानन्तर्हितवचनम् । तस्य । षष्ठ्याः स्थाने योगत्वादिकृन्निवृत्तिः । एतेषां वार्तिकानामुपष्टम्भेन पूर्वपक्ष उत्थाप्य निराकरणीयः । ... ७

---

मुद्रकः—विद्याविलास प्रेस, बनारस । २······

# प्रबन्ध-पारिजात

इसमें परीक्षार्थी छात्रोंको संस्कृत प्रबन्ध रचना लिखने के नियम अत्यन्त सरल रूपमें समझाये गये हैं और तदनुसार परीक्षोपयोगी 'प्रबन्ध लेखनप्रकार' (परीक्षामें आने योग्य निबन्धों का उत्तर) इस तरह सरल और संक्षिप्त में लिखा गया है कि अभ्यास कर लेने पर भी विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर सकते हैं। इतना ही नहीं अन्तमें (१) 'पत्र-लेखन प्रकार' (चिट्ठी-पत्री, आवेदन पत्र आदिका उल्लेख) तथा प्रसंगोपयुक्त (२) 'सुभाषितगद्यावली' (३) 'सुभाषित-पद्यांशावली' और (४) 'लौकिक न्यायमाला' आदि विषयोंका समावेश करके आधुनिक चतुरस्र विद्वान् बननेका सुगम रास्ता दिखाया गया है। विश्वास है कि आजतक के प्रकाशित प्रबन्धोपयोगी ग्रन्थों में इस 'प्रबन्धपारिजात' के समान दूसरी कोई भी पुस्तक नहीं है। १।)

# रामवनगमनम्

## सटिप्पण-सान्वय-सुधा-इन्दुमती-चतुष्टयप्लावितम्

याद रखिये सन् ४८ की नवीन नियमावलीके अनुसार निर्णयसागर प्रेससे प्रकाशित वाल्मीकिरामायणके मूलाधार पर यही एक विशुद्ध प्रामाणिक संस्करण प्रकाशित हुआ है। इसकी प्रथम परीक्षोपयोगी 'सुधा' टीकामें अन्वय, पर्याय, समास, कोश तथा ग्रन्थोपक्रमसे टिप्पणीमें पौराणिक कथायें भी दी गयी हैं जो कि परीक्षामें प्रश्न आने योग्य है और अन्य किसी भी संस्करणमें इसका उल्लेख नहीं किया गया है। एवं सुधा टीकाके साथ साथ 'इन्दुमती' नामकी विस्तृत भाषा टीकामें श्लोकोंके गूढार्थ अभिप्रायोंको इस तरह सरल शब्दोंमें अभिव्यक्त कर दिया गया है कि विद्यार्थियोंको श्लोकार्थ समझनेमें प्रायः शिक्षकों की आवश्यकता नहीं ही होगी। ग्रन्थके शुरूमें प्रत्येक सर्गका परीक्षोपयोगी संक्षिप्त कथासार भी दे दिया गया है। परिष्कृत अभिनव द्वितीय संस्करण १॥।)

# विदुलोपाख्यानम्

## सान्वय-लीला-विलास-संस्कृत-हिन्दीटीकाद्वयोपेतम्।

सन् ४८ के नवीन पाठ्यक्रमके अनुसार यह ग्रन्थ प्रकाशित किया गया है। इस ग्रन्थकी 'लीला' नामक संस्कृत व्याख्यामें अन्वय, पर्याय, समास, कोशादि देकर श्लोकोंकी अति सरल व्याख्या कर दी गयी है। साथमें 'विलास' नामकी विस्तृत हिन्दी भाषा टीका होनेसे तो इस संस्करणकी उपयोगिता और भी अधिक बढ़ गयी है। प्रथमाके सुकोमलमति विद्यार्थियोंके लिये यही एक सर्वोत्तम संस्करण सिद्ध हो चुका है। द्वितीय संस्करण ॥।)

---